# ग्रंथकर्तुः प्रशस्तिः

सर्वज्ञशासने रम्ये घोराघौघविनाशने ।
धर्मानेकगुणाधारे सूरस्थे सुरसंस्तुते ॥१॥

अणहिल्लपुरे रम्ये सज्जनः सज्जनोऽभवत् ।
प्राग्वाटवंशनिष्पन्नमुक्तारत्नशताग्रणीः ॥२॥

मूलराजनृपेन्द्रस्य धर्मस्थानस्य गौष्ठिकः ।
धर्मसारधराधारः कूर्मराजसमः पुरा ॥३॥

कृष्णनामा सुतस्तस्य गुणरत्नमहोदधिः ।
बभूव धर्मकर्मण्ये जनानां मौलिमण्डनम् ॥४॥

निन्यान्वय[1]महामुक्तामालायां नायकोपमः ।
चतुर्विधस्य संघस्य दानपीयूषवारिदः ॥५॥

स्वसैका जयती तस्य कृष्णस्येव सुभद्रिका ।
राणूनामा प्रिया साध्वी हिमांशोरिव चन्द्रिका ॥६॥

तस्यां पुत्रत्रयं जातं विश्वसर्वस्वभूषणम् ।
वीजासाहणपालाख्यौ साढदेवस्तृतीयकः ॥७॥

चतस्रश्च सुतास्तस्या धर्मकर्मैककोविदाः ।
सिरी (श्री ?) शृंगारदेवी च सुन्दूः सोखूरिति क्रमात् ॥८॥

कलिकालमहाव्यालविषव्यालुप्तचेतसः ।
जैनधर्मस्य सम्पन्ना जीवातुस्तत्र सुन्दका ॥९॥

महाश्रावककृष्णस्य सन्तानेन शुभात्मना ।
व्याख्यापितः कथाकोशः स्वकर्मक्षयहेतवे ॥१०

कुन्देन्दुनिर्मले कुन्दकुन्दाचार्यान्वयेऽभवत् ।
धर्मो मूर्त्तः स्वयं वा श्रीकीर्तिनामा मुनीश्वरः ॥११॥

तस्मात्तमोपहः श्रीमान्सप्रभावोऽतिनिर्मलः ।
श्रुतकीर्तिः समुत्पन्नो रत्नं रत्नाकरादिव ॥१२॥

५. १ निद्रान्वय ।

विद्वान् समस्त शास्त्रार्थविचारचतुराननः ।
शिरश्चन्द्रकराकारकीर्तिव्याप्तजगत्त्रयः ॥१३॥

व्याख्यातृत्वकवित्वादिगुणहंसैकमानसः ।
सर्वज्ञशासनाकाशशरत्पार्वणचन्द्रमाः ॥१४॥

गांगेयभोजदेवादिसमस्तनृपपुङ्गवैः ।
पूजितोत्कृष्टपादारविन्दो विध्वस्तकल्मषः ॥१५॥

भव्यपद्माकरानन्दी सहस्रांशुरिवापरः ।
ततो गुणाकरः कीर्तिसहस्रोपपदो ऽजनि ॥१६॥

कर्पूरपूरोज्वलचारुकीर्तिः
सर्वोपकारोद्यतचित्तवृत्तेः ।
शिष्यः समाराधितवीरचन्द्रः
तस्य प्रसिद्धो भुवि वीरचन्द्रः ॥१७॥

सूरिश्चारित्रसूर्यस्य तस्य तत्त्वार्थवेदिनः ।
विवेकवसतिर्विद्वान् शिष्यः श्रीचन्द्रो ऽभवत् ॥१८॥

भव्यप्रार्थनया ज्ञात्वा पूर्वाचार्यकृतां कृतिम् ।
तेनायं रचितः सम्यक् कथाकोशोऽतिसुन्दरः ॥१९॥

यदत्र स्खलितं किंचित्प्रमादवशतो मम ।
तत् क्षमन्तु क्षमाशीलाः सुधियः शोधयन्तु च ॥२०॥

यावन्महीमरुन्मर्त्या मरुतो मन्दरोरगाः ।
परमेष्ठीपावनो धर्मः परमार्थपरमागमः ॥२१॥

यावत्सुराः सुराधीशः स्वर्गचन्द्रार्कतारकाः ।
तावत्काव्यमिदं स्थेयात् श्रीचन्द्रोज्वलकीर्तिमत् ॥२२॥

॥ इति श्री कथाकोशः संपूर्णः ॥